


तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रमासपत्रिका

जून् २०२० रु.५/-

द्वाभ्यां देवीभ्यां सहितः
श्रीकल्याणवेङ्कटेश्वरस्वामी
श्रीनिवासमङ्गापुरम्

## गीतामृतम्



अयनेषु च सर्वेषु यथा भागमवस्थिताः।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि।।

भवन्तः सर्वेऽपि व्यूहानां द्वारदेशेषु स्वस्वस्थाने तिष्ठन्तु। सेनाधिपतिं भीष्मं च रक्षन्तु।

(भगवद्गीता ११/१)

## जगन्नाथाष्टकम्

न वै प्रार्थ्यं राज्यं न च कनकमाणिक्यविभवम्
न याचेऽहं रम्यां सकलजनकाम्यां वरवधूम्।
सदा काले काले प्रमथपतिना गीतचरितो
जगन्नाथः स्वामी नयनपथगामी भवतु मे।।

(श्री जगद्गुरुशङ्कराचार्यकृत जगन्नाथाष्टकस्य देव व्रती टीका)



राज्यं मया न प्रार्थ्यते। सम्पदः अपि न मया प्रार्थ्यन्ते। सुन्दरी अपि न मया प्रार्थ्यते। परं जगन्नाथदर्शनमेव इष्यते मम इति।

सम्पादकीयम्

# महाभाग्यमारोग्यमेव

उद्धरेदात्मनात्मानमात्मानमवसादययेत्।
आत्मैवह्यात्मनो बन्धुरामैवरिपुरात्मनः।।

एवं भगवतोक्तरीत्या ''त्वं स्वयमात्मानमुद्धर! भवता स्वकीयानि कार्याणि स्वयमेव द्रष्टव्यानि। सम्यक् ज्ञात्वाऽपि अधोगतिं मा प्राप। भवतः आत्मैव भवतः बन्धुः शत्रुरपि भवतीति ज्ञात्वा उत्तम जीविकामनु - भोक्तव्ये संशोध्य पन्थानमेकं साधय।'' इत्येतादृशं विद्वद्वमयं सर्वदा स्मर्तव्यम्।

प्रकृतिमेव दैवमिति मन्वानन्भारतीयान् छान्दस वादाः इति केचन। अस्माकं सदाचारे अत्युत्तम नमस्कार पद्धतिः या वर्तते, तामेव पद्धतिं पाश्चात्याः अनुसरन्तैरस्सन्ति। अस्मदीयाः पूर्वजाः व्याधिभ्योत्पाटनाय क्षाळित वस्त्रधारणं भोजनात्पूर्वं परमपि करचरणयोः प्रक्षाळनं, बहिस्तात्प्रत्यावर्तनान्तरं पादप्रक्षालनम् इत्यादि भारतीय संस्कृति विषयान् बोधिताः।

पश्चात् भोजन विषये कदली पत्रेषु भोजनम् अत्यन्तारोग्यप्रदम्। ताम् पात्रेषु तथैव रजत पात्रेषु जलपानेन सूक्ष्मकीटकाः नश्यन्तीति परिशोधितोऽयं विषयः। अस्माकं देवालयेष्वपि तीर्थप्रदानाय रजतपात्रे तुलसी, लवङ्ग, घनसार, एलाचूर्णं संस्थाप्य तीर्थमर्पयन्ति। तेन शारीरक रुग्मताः सर्वेऽपि नश्यन्ति। तदर्थं तीर्थप्रदान समये अर्चकाः ''अकालमृत्यु हरणं सर्वव्याधिः निवारणम्'' इति मन्त्रेण अर्चन्ति। अस्माभिराचरितेषु कर्मसु अथवा कर्मणां विषये यः कोऽपि वा किमपि वदतीति मत्वा कार्ये निर्लक्ष्यं कुर्मश्चेत् एतादृशी ''करोना'' नामक व्याधयः आप्रपञ्चं नाशयति। तदर्थं अस्माभिः दैनन्दिने जीवने यानि कर्माणि प्रोक्तानि तानि सर्वाण्यपि आचरणीयानि परिरक्षणीयानि भवन्ति।

अस्यां महामारी सङ्कट परिस्थितौ तिरुमल तिरुपति देवस्थान अधिकारिभिः, विद्वद्वरेण्यैः, जप, यज्ञ, पारायणादि कार्यक्रमाः अनुष्ठिताः। विशेषतया तत्र योगवाशिष्ठान्तर्गत विषूचिका महामन्त्र पारायण पुरस्सर धन्वन्तरी मन्त्र पारायणम् दिनान्यावत् आचरितम्। इदानीं सर्वतुष्टि पुष्टिकरं, आरोग्यप्रदं रामायणान्तर्गत सुन्दरकाण्ड पारायणमाचरन्तः सन्ति। ''अस्माकम् आरोग्यमेव महाभाग्यमिति मत्वा'' एतादृशकार्यक्रमाः देवस्थानपक्षतः साक्षात् भगवतानुग्रहेण निर्वहन्ति।

इतोपि सर्वकारोऽपि ''करोना'' व्याधि निर्मूलनाय सूचनाः संप्रेषयन् करप्रक्षालनम्, मुखवस्त्रं धृत्वा, भौतिकदूरगमनमाचरमत्त्विति संप्रार्थयति।

एवं व्याधि निर्मूलनाय भगवतः वेङ्कटेश्वर चरण युगळं सप्रश्रयं संप्रार्थयामः।

नियमान्पालयामः। विश्वारोग्याय कटिबद्धाः भवेम।

विश्वकल्याण गोविन्द! गोविन्द!

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः


तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०७ सञ्चिका-०३


## जून्-२०२०

श्रीशार्वरि नाम संवत्सरस्य ज्येष्ठ शुक्ल दशमि तः आषाढ शुक्ल दशमि पर्यन्तम् - १९४१


| | |
|---|---|
| मुक्तिप्रदानि सप्ततीर्थानि | 06 |
| - रोम्पिचर्ल यश्वन्त दीक्षितः | |
| श्रीश्रीनिवासस्य ज्येष्ठाभिषेकमहोत्सवः | 07 |
| - आचार्य वेदान्तं श्रीविष्णुभट्टाचार्यः | |
| आदित्यस्तोत्रम् | 09 |
| - एन्.उमादेवी | |
| आसुरीलक्षणानि बन्धनकारकानि | 10 |
| - डा.एम्.प्रफुल्ला | |
| अन्नमाचार्यजीवनचरित्रम् | 15 |
| - एम्.नागमाधुरी कामेश्वरी | |
| जगन्नाथरथयात्रा | 17 |
| - डा.अजयकुमारनन्दः | |
| हरिदासवाङ्मये श्रीवेङ्कटाचलाधीशः | 19 |
| - डा.गङ्गिशेट्टि लक्ष्मीनारायणः | |


**मुखचित्रम्** – श्रीदेवी भूदेवी समेत श्रीकल्याणवेङ्कटेश्वरस्वामिनः, श्रीनिवासमङ्गापुरम्

**अन्तिमरक्षापुटः** – श्री गोविन्दराजस्वामिनः पुष्पयागः, तिरुपति


गौरवसम्पादकः-
श्री अनिल्कुमार् सिंघाल्, I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
आचार्य के.राजगोपलन्, Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
सहायकार्यनिर्वहणाधिकारि
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्केटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.


### सूचना

मुद्रितलेखानां विचाराः लेखकानामेव । एतद्विषये अस्माकं दायित्वं नास्ति।

– *प्रधानसम्पादकः*


### सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०

सूचनानाम्, आक्षेपाणां च कृते संपर्क कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org


एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-



# मुक्तिप्रदानि सप्ततीर्थानि

- रोम्पिचर्ल यश्वन्त दीक्षितः
चरवाणिः - ९४९४५३८५०९

**अनन्तवेदसं वेद्य लक्ष्मीनाथान्तकारण!
ज्ञानानन्दैश्वर्यपूर्णनमस्ते करुणाकर!!**

परम पावन शेषाद्रौ बहूनि तीर्थस्थलानि राराज्यन्ते। ते सर्वे तीर्थाः मनुष्यकृत पापानपनाद्य पूतगात्रान् कारयन्ति। तेषु तीर्थेषु सप्ततीर्थाः अन्यतमाः भवन्तीति श्रीब्रह्मपुराणान्तर्गत श्रीवेङ्कटाचलमाहात्म्य चुतर्थाध्याये विवृतमस्ति।

तत्रादौ दिलीपः दूर्वासं पृच्छति यत् हे मुनिसत्तम! शेषाचले कति पुण्यतीर्थाः सन्ति। तेषु कति प्रधानाः? तेष्वपि अत्यन्त प्रधानाः सद्धर्मरतिदातारश्च के? इति पप्रच्छ। तं प्रश्नमाकर्ण्य दूर्वासः इत्यब्रवीत्। हे राजन्!

**''षट्षष्टि कोटि तीर्थानि पुण्यान्यत्र नगोत्तमे।
अष्टोत्तर सहस्रं तु तेषु मुख्यानि सुव्रतः''।। इति।**

अर्थात् अस्मिन् पर्वते त्रिषष्ठिकोटि पुण्य तीर्थानि विद्यन्ते। तेषु अष्टोत्तर सहस्र तीर्थानि सद्धर्मरतिप्रदाः। तत्रापि सद्विज्ञान प्रदानि अष्टोत्तरशतानि, तेष्वपि अष्टषष्टि तीर्थानि भक्ति वैराग्य प्रदानानीति निगदितानि। तत्र विशेषतया सप्त तीर्थानि मुख्यतमानीति मुक्तिदानीति व्यवहरन्ति। तान्यथा --

**''स्वामि पुष्करिणी चैव वियद्गङ्गा ततः परम्।
पश्चात्पापविनाशं च पाण्डु तीर्थं ततः परम्।।
कुमारधारिका तीर्थं तुम्बोस्तीर्थं ततः परम्।।
कृष्णतीर्थमितिख्यातं सर्वपापहरं शुभम्।
तत्र स्नान्ति च ये मर्त्याः ते यान्ति परमं पदम्।।**

इत्युक्ते श्रीस्वामिपुष्करिणी, आकाशगङ्गा, पापनाशनम् पाण्डवतीर्थम्, कुमारधारा, तुम्बुर, कृष्ण तीर्थेषु सप्तसु स्नानमाचरिताः जनाः मुक्तिमवापुः। इदानीं कदा कस्य तीर्थकालः समायातीत्यमुं विषयमत्रप्रस्तौति। अत्र विशेषः कः इति चेत् यदा यस्य तीर्थस्य पूण्यकालस्समायाति, तदा भारतावनौ विद्यमान समस्त पूण्यतीर्थानि तस्मिन्तीर्थे तिष्ठन्ति।

**''मकरस्थे रवौ राजन् पौर्णमास्यां महातिथौ।**
पुष्यनक्षत्र युक्तायां स्नानकालो विधीयते।।
इत्यारभ्य तेषां काल निर्णयः तत्रविधीयते।

मकरमासे पुष्यमी नक्षत्र पौर्णाम्यां कृष्णतीर्थे स्नानं प्रशस्तमित्युक्त मस्ति। कुम्भमासे मघानक्षत्र पौर्णम्यां कुमार धारायां स्नानं क्रियते चेत् राजसूय याग फलं सिद्ध्यति। मीन मासे उत्तर फल्गुनी नक्षत्रयुक्त पौर्णम्यां अपराह्णकालः तुम्बुरतीर्थःकालः। तस्मिन् समये स्नानं करोति चेत् जन्मबन्धः नश्यति। मेषमासे चित्तानक्षत्र युक्त पौर्णम्यां आकाश गङ्गायाः पुण्यकालः। अस्याः स्नानेन सद्यः क्रतु आचरणपुण्यं प्राप्नुवन्ति। वृषभमासे शुक्लपक्षे वा कृष्ण पक्षे वा भानुवासर अथवा भौमवासर युक्त द्वादश्यामपि आकाशगङ्गायाः पुण्यकालः भवति। तदानीं स्नानं क्रियते चेत् सकल प्रति बन्धक निवृत्तिर्भवति। आश्वयुज शुक्लसप्तमी उत्तराषाढ नक्षत्रयुक्त भानुवासरे, तस्मिन्मासे एव शुक्ल पक्ष द्वादशी उत्तराभाद्र नक्षत्रे वा पाप विनाश तीर्थकालः। तदानीं स्नानं क्रियते चेत् मुक्तिमवापुः।

**''धनुर्मासे सितेपक्षे द्वादश्यामरुणोदये।
आयान्ति सर्वतीर्थानि स्वामि पुष्करिणी जले।।**

अर्थात् धनुर्मासे शुक्ल पक्षे द्वादश्यां अरुणोदयकालः श्रीस्वामि तीर्थकालः। तस्मिन्समये स्नानं क्रियते चेत् गङ्गास्नान फलमवाप्नुन्ति, देहवासाने भगवतः पदं प्राप्नुमः। पूर्वजन्मपुण्यफलेन तीर्थं स्नान भाग्यमपि आगच्छति। तदानीं शक्ति वञ्चनां विना दानादि कार्याणि कर्तव्यानि। तदा करोतिचेत् इदानीं येन करोना नामक रोगेण पीडिताः सन्ति तादृशरोगाः अपि आगन्तुं न प्रभवन्ति। तर्हि यथा शक्ति एतेषु तीर्थेषु तस्मिन् काले स्नानं कुर्मः। भगवतः अनुग्रहेण पूतगात्राः भवेम।



# श्रीश्रीनिवासस्य ज्येष्ठाभिषेकमहोत्सवः

आचार्य वेदान्तं श्रीविष्णुभट्टाचार्यः
चरवाणी - ९८४९२६४६०७



सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम्
कृत्वात्मनः प्रीतिकरीं सुवर्णरजतादिभिः।
तामर्चयेत् तां प्रणमेत् तां नमेत् तां विचिन्तयेत्
विशत्यापास्तदोषस्तु तामेव ब्रह्मरूपिणीम्॥
प्रकीर्णाधिकारः ३३-४५

भगवतः अखिलाण्डकोटिब्रह्माण्डनायकस्य वेङ्कटाद्रौ विराजमानस्य श्रीश्रीनिवासस्य आराधनं सर्वाभ्युदयुसाधकमिति विपश्चिदपश्चिमानां निश्चप्रचम्।

आराधनं तावत् सुप्रभातादारभ्य शयनोत्सवपर्यन्तं षट्सु संप्रदायपद्धस्य वैखानस भगवतः शास्त्रानुसारेणैव प्रचलतीति नैव सन्देहलेशः।

उत्सवास्तावात् नित्य नैमित्तिक-वार-पक्ष-मास-संवत्सरोत्सवा अपि नैके अनुष्ठीयन्ते। तत्र संवत्सरोत्सवेषु प्रधानतमाः तावत् वसन्तोत्सव-पद्मावतीपरिणयोत्सव-ज्येष्ठाभिषेकोत्सव-पवित्रोत्सव-ब्रह्मोत्सव-पुष्पयाग-अध्ययनोत्सव-प्लवोत्सवाः सन्ति। एते पारंपर्यपद्धत्या वैभवेन प्रचलन्तीति सार्वजनीनोऽयं विषयः।

### ज्येष्ठाभिषेकः

संवत्सरोत्सवेषु अन्यतमः विशिष्टः अद्वितीयश्चश्चायं ज्येष्ठाभिषेकः

इत्युक्तरीत्या भगवतः अर्चामूर्तेः बिम्बानि तावत् सुरूपाणि प्रसन्नवदनेक्षणानि अचिन्त्यदिव्याद्भुतनित्ययौवनलावण्यातिशयेन च राराजमानानि स्युः। बिम्बं तावत् द्विविधं भवेत् लोहबिम्बं शिलाबिम्बमिति। लोहबिम्बानि तावत् कौतुक-स्नपन-उत्सव-बलिनामकानि।शिलाबिम्बं तावत् ध्रुवबिम्बमेव।

**लोहबिम्बानां रक्षणार्थं उद्दिष्टः ज्येष्ठाभिषेकः।**

तिरुमलक्षेत्रे विराजमानस्य श्रीश्रीनिवासस्य **श्रीभूसहित उत्सवबिम्बं अत्यन्तं प्राचीनतमं भवति। प्रायः षट्शत संवत्सरात् पूर्वमेव प्रतिष्ठापितमभूत्।**

तिरुमलक्षेत्रे विराजमानानां उत्सव बिम्बानां पुष्पालङ्करणं स्नपनं वस्त्रधारणं सौवर्णादिभिः भूषणैः अलङ्करणं नित्यं विशेषतया कुर्वन्ति अर्चकाः। ताभिः क्रियाभिः बिम्बानां अङ्गभिन्नं सौन्दर्यभिन्नं च प्रायः भवेदिति धिया बिम्बरक्षणार्थं रूपसौन्दर्य संरक्षणार्थं च श्रीनिवासस्य उत्सवबिम्बानां ज्येष्ठाभिषेकः वैभवेन वैदिक्या पद्धत्या समाचरन्ति अर्चकाः।



प्रतिष्ठापनीयस्य विग्रहस्य रूपं त्रिविधं चित्रं चित्रार्धं चित्राभासमिति। तत्र चित्रं तावत् अङ्ग उपाङ्ग-महाङ्ग-प्रत्यङ्गैः, सौष्ठवमेव। चित्रार्धं तावत् पादादिशिरः पर्यन्तं पुरोभागस्य सन्दर्शनं, चित्राभासं तावत् पटकुड्यादिषु विलेखनम्।

एतानि त्रीणि बिम्बानि प्राणप्रतिष्ठार्हाणि भवन्ति। तत्र अङ्गानि तावत् -

कण्ठ-उदर-शिरः-वक्षःस्थल-बाहु-कोष्ठ-उरु-
पाणि-कटि-जङ्घ-इत्येतानि महाङ्गानि।
नेत्र-नासिका-ओष्ठ-तालु-कर्ण-एतानि अङ्गानि।
केशरोमादयः उपाङ्गानि। मकुटं-भूषणं-अम्बरं,
शङ्ख-चक्र-शिरश्चक्र-पादपद्म-आयुधानि
पीठं प्रभा छत्रं एतानि प्रत्यङ्गानि च भवन्ति।

क्रियाधिकारः २३, ८१

एभिः त्रिभिः सहितस्य बिम्बस्य रक्षणं अवश्यं सम्पादनीयं भवेत्। अङ्गभिन्नस्य मूर्तेः पूजा महान् दोषप्रदः। बिम्बे स्थितानां अङ्गानां रक्षणार्थं उद्दिष्टः उत्सवविशेष एव ज्येष्ठाभिषेकः। बिम्बानां रक्षणार्थं कवचसन्धानमेव अत्रप्रधानं भवति।

ज्येष्ठेमासि सुसंप्राप्ते।
दिने ज्येष्ठर्क्ष संयुते।।

क्रियाधिकारः ३२-५०

ज्येष्ठे मासे ज्येष्ठानक्षत्रे दिने इदं आचरणीयं भवेत्।

तस्मात् सर्वप्रयत्नेन।
बिम्बरक्षां कारयेत्

क्रियधिकारः ३२,८२

अग्निकुण्डे वैष्णव विष्णुसूक्त सर्वदैवत्य पारमात्मिक-ईंकारादिभिः मन्त्रैः महाशान्तिहोमः अभिषेकः कवचसन्धानं इत्येते कार्याः।

तिरुमलक्षेत्रे विराजमानस्य श्रीश्रीनिवासस्य त्रिदिनाध्वरप्रयुक्ते क्रियमाणे ज्येष्ठाभिषेकमहोत्सवे प्रथमदिने महाशान्तिहोमः पूर्वे सन्धानस्य कवचस्य विसर्जनं, अष्टोत्तरशतकलशस्नपनं, मौक्तिक कवच सन्धानं, वीथ्युत्सवः एते अनुष्ठीयन्ते।

द्वितीयदिवसे मौक्तिककवचविसर्जनं, होमः, अभिषेकः, वज्रसहितकवचसन्धानं, वीथ्युत्सवः एते अंशाः समाचरन्ति। ज्येष्ठानक्षत्रदिने तृतीयदिवसे वज्रकवचविसर्जनं, होमः, अभिषेकः, भगवतः मूर्तीनां आसंवत्सरं यावत् स्वर्णकवचसन्धानं, वीथ्युत्सवः एते वैदिकया वैखानसागमपद्धत्या सम्यगनुष्ठीयन्ते।

ज्येष्ठाभिषेकोत्सवेनानेन भगवान् सन्तुष्टान्तरङ्गो-भूत्वा भक्तान् सर्वान् अस्मान् अनुगृह्णातु इति तं श्रीनिवासं संप्रार्थ्य विरमामि।

श्रीश्रीनिवासः सतांगतिः





# आदित्यस्तोत्रम्

- एन्.उमादेवी
चरवाणि - ९९५१७३४४९४

अरुण किरणमादित्यं शरणागतरक्षणैककृतदीक्षम्।
करुणापयोराशिं शरणं करवाणि मानसे सततम्।।

दुरितलतिकालवित्रं तमोनिवहजैत्रमब्जिनीमित्रम्।
सकल भुवनैकनेत्रं तेजोमयगात्रमाश्रये मित्रम्।।

निगममयं त्रिगुणमयं तेजोमयमरुणकिरणपुञ्जमयम्।
सत्वमयं भद्रमयं प्रज्ञानमयं हिरण्मयं नौमि।।

चित्रमिदं मित्रमपि द्यमणे भक्तौघमानसाब्जानाम्।
पर इति सर्वेषां त्वां वाक्यानि वदन्ति नैगमान्तानि।।

त्वयि प्रसन्ने कमलाप्त सर्वे ग्रहाश्च कामं मुदिता भवेयुः।
यतस्त्वमीशस्सकल ग्रहाणामतोऽनिशं त्वां शरणं प्रपद्ये।।

लोकास्समस्ताः किरणैस्त्वदीयैः
जीवन्ति वृद्धिं क्रमशो लभन्ते।
स्थातुं विना तैर्न च शक्नुवन्ति
तत्त्वामहं सन्ततमाश्रयामि

आरोग्यमिच्छेद्यदि भास्करं त्वा
माराधयेदेव सरोजबन्धो

आरोग्यं भास्करादिच्छेत् इति वाक्यानुसारं आरोग्यस्य मूल भूतः देवः भास्करः इति ज्ञायते। लोके देवान् मनुष्यान् पशुपक्ष्यादीन् तेषु तेषु कार्येषु नियोजयति। श्री सूर्यदेवः समुद्र नदी तटाकादि जलं स्वीकृत्य मेघ रूपेण मेघ द्वारा लोके सर्वत्र वर्षजलं ददाति। विश्वे सकल धान्यादीनां समृद्धेः कारकाः भवति। इदानीं तन काले करोना वैरस् व्याधेः निवारणाय देशे सर्वत्र जनैः सूर्यदेवता मन्त्राः स्त्रोत्र रुपेण श्लोकाः पठनीयाः। श्रद्धया भक्त्या भगवतः सूर्याराधनेन जनानाम् सर्वरोग निवारणम् आयुरारोग्य समृद्धिः भवेत्।

आरोग्यवनन्तं कुरु मां दयाळो
निर्वाप्य रोगानखिलान् भजे त्वाम्।

दातुं यदीच्छा तवमेऽस्ति पूषन्
नीरोगताकाञ्चनमुख्यकामान्।
युक्तं तवास्मिन् भव एव दातुं
भक्तस्य ते जन्म पुनः कुतो मे।।

दुर्दशना घृष्टिचयास्त्वदीय
देवासुराणामपि तिग्मधामन्।
विना हि तैः प्राणिति नैव किञ्चि
ज्जीवातवस्ते जगतोऽखिलस्य।।

रोहन्ति बीजानि विनैव भासां
स्पर्शैनिरासक्तान्यवनौ न यस्य
जीवास्समस्ताः प्रभवन्ति यस्मा
त्सेवेऽनिशं तं सवितारमीशम्

प्रिया नलिन्यस्तव सन्ति बह्व्यः
त्वमेक एव प्रियकृन्नलिन्याः।
तथा प्रियास्ते बहवोऽपि सन्ति
त्वमेक एव प्रियकृन्ममार्क।।

तवोदये देव तपोधनानां हृत्पद्मषण्डा विकसन्ति तेषाम्
करारविन्दानि तु कुड्मलन्ति चित्रं त्वदीया सरसीजमैत्री

तमोरुगेनः परिपन्थिनं त्वां
मित्रं वदन्तीति विचित्रमेतत्।
अपि द्विषत्कैरविणीचानां
त्वं लोकबन्धुप्रथया विभासि।।

मूर्तित्रयस्यामरसत्तमेषु तनोषि मूर्तिं महसां निधे त्वम्।
गुणत्रयस्यापि च रुपधेयं त्रयीतनुं त्वां शरणं प्रपद्ये।।

त्रिमूर्तयस्ते खलु मादृशानां
नृणामदृश्या विधिविष्णुरुद्राः।
दृश्यत्रिमूर्त्यात्मकमाश्रये त्वां
श्रोयांसि मे देहि दयापयोधे।।

सन्ध्यासु नित्यं विमलोदकेषु
स्नात्वाघमर्षाख्यमनुं जपन्तः।
श्रद्धाळवो भक्तियुतास्तवार्घ्यं
दद्युस्त एवापगताघबृन्दाः।।

# आसुरीलक्षणानि बन्धनकारकानि

तेलुगु मूलम् - डा।। वैष्णवांङ्घ्रि सेवकदासः
संस्कृतानुवादः डा. एम्. प्रफुल्ला
चरवाणी - ९४४०२८५९८५



बन्धः, मोक्षः इति द्वौ शब्दौ आध्यात्मिकविषये बहुशः श्रूयेते। लौकिकजीवनेऽपि श्रूयन्ते। परन्तु न कोऽपि तौ चिन्तयति। बन्धमोक्षौ नाम किम्? आरक्षकाः चोरान्, अपराधीन्, घातकान् निगृह्य, हस्तौ शृङ्खलया बध्वा, न्यायस्थानं नयन्ति। तेषां अपराधमनुसृत्य कारागारबन्धनादि शिक्षाः विधीयन्ते। एतत् निदर्शनं बन्धन शब्दस्यार्थं निरूपयति। अर्थात् बन्धितः जनः अन्यजनैरिव न चरति। स्वातन्त्र्यं नानुभवति। स्वजनैः सह सुखसन्तोषान् नानुभवति। सुखेन न स्वपिति। एते बन्धनस्य दुष्परिणामाः। अथ मोक्षं किमिति चिन्तयामः। साम्प्रतं कोरोना नामक महम्मारी लोके सर्वत्र व्याप्तः अस्ति। कोऽपि जनः कोरोना व्यधिग्रस्तः भवति तं वैद्यालयं नयन्ति। चिकित्सां कुर्वन्ति। अन्यदेशापेक्षया भारतदेशे बहवः रोगमुक्ताः भवन्ति। अर्थात् रोगात् मोक्षं प्राप्नुवन्ति।

एवं बन्धमोक्षौ विज्ञाय वास्तविकबन्धमोक्षौ जानाति जनः। एतत् प्राज्ञां लक्षणम्। आसुरीलक्षणानि बन्धनकारकानीति भगवद्गीतायां षोडशे अध्याये स्पष्टीकृतम्। आसुरीलक्षणानि बन्धनकारकानि इति गीताचार्यस्योक्तिः। अर्थात् आसुरीगुणेन बन्धनं अवश्यं भवति। बन्धनेन दुःखानि जायन्ते इति जानीमः। आसुरीगुणानां लक्षणं किमिति भगवद्गीतायां एवमुक्तम्।

**दम्भोदर्पोऽभिमानश्च क्रोधः पारुष्यमेव च।**
**अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम्।।**

भ.गी.१६-४

"दैवीगुणाः यथा मुक्तिकारकाः तथैव आसुरीगुणाः बन्धकारकाः। हे पाण्डुपुत्र, त्वं दैवीगुणसंभूतः। चिन्ता मास्तु। आसुरीगुणाः जनान् नरकं प्रापयन्ति। तत् नरकं अस्मिन्नेव जन्मनि दृश्यते। अपि च ते मरणानन्तरमपि नरकं यान्ति।

यः स्वस्य विद्याधनसम्पदः, आधिपत्यं, सौभाग्यं जनबलं इत्यादि कारणैः विशृङ्खलं चरति तादृश व्यवहारः एव दम्भः। एतानि सर्वानि सत्यपि यः विनम्रः भवति सः विशेषेण दैवानुग्रहपात्रं भवति। किन्तु गर्वितः जनः यथेष्टं भाषति। अयं ज्येष्ठः वा अयं कनिष्ठः वा इति न पश्यति। केऽपि तान् न सम्मानयन्ति, विरुद्धाः भवन्ति तदा तेषां अहङ्कारः विघटितः भवति। आसुरीगुणयुतेषु दृष्टः अन्यः दुर्गुणः अहङ्कारः। यदा अहङ्कारः विघटितः भवति तदा क्रुद्धाः भवन्ति। परुषं वदन्ति। तेषां विचक्षणा शिथिली भवति। अज्ञानेन व्यवहरन्ति। ईदृशलक्षणानि कस्यापि, कदापि, कस्यामप्यवस्थायां च कष्टदायकानि। बन्धनकारकानि। अपि च ते अवश्यं नरकं प्राप्नुवन्ति।

अत एव युवानः आसुरीस्वाभावान्मुक्ताः भवेयुः। यदि जीवितकाले विजयं प्राप्नुवन्ति, तदा तत्कारकानां प्रोत्साहं, साहाय्यं च न विस्मरेयुः। विनम्रतां अवगच्छेयुः। एषः विनयगुणः विजयं प्रापयति। विनयशीलिनः कदापि अहङ्कारिणः न भवन्ति। विनयेन युक्तान् विद्यावतः लोकः प्रशंसति। क्रोधात् न कश्चिदपि लाभः विद्यते। अपि च विनाशः भवति। यदा कस्यचित् वाक् शुद्धः भवति तदा जनाः सर्वे तस्मिन् सहृदयाः भवन्ति इति। ये विना पारुष्यं, विनम्रतया वदन्ति, तान् लोकः सम्मानयति।

अतः युवानः गीता श्लोके उक्तान् आसुरीगुणान् प्रत्येकं विसृज्य विजयपथि चरेयुः। ते सर्वत्र शुभाशिषः, आह्वानानि, आतिथ्याः प्राप्नुवन्ति। यावत्पर्यन्तं आसुरीगुणाः भवन्ति तावत्पर्यन्तं बन्धनं, दुःखं, नरकक्लेशः अवश्यं संभवन्ति। तस्मात् जाग्रत।





तिरुमल नादनीराजनवेदिकायां निर्वाहित सुंदरकांड पठन प्रारंभः

लोककल्याणार्थं तिरुमल धर्मगिरिवेदविज्ञानपीठे
निर्वाहितः महासुदर्शनसहित विश्वशांतिमहायागः















ति.ति.दे. धर्मकर्तल मण्डले:
एक्स् अफिषियो
सभ्यत्वेन नियमिता: (२७.०५.२०२०)
आन्ध्रप्रदेश् राष्ट्र देवादाय शाख
कमीषनर् श्री पि.अर्जुन्रावु ऐ.ए.एस्.,
महोदयानाम् श्री वेङ्कटेश्वरस्वामिन:
चित्रपटं समर्पयन् ति.ति.दे.
अडिषनल् कार्यनिर्वहणाधिकारी
श्री ए.वि.धर्मरिड्डि महोदय:







ति.ति.दे. नूतन
संयुक्तकार्यनिर्वहणाधिकारि रुपेण
(विद्या, आरोग्यम्)
आन्ध्रप्रदेश् सर्वकारेण
नियमिता:
श्रीमति एस्.भार्गवी ऐ.ए.एस्. महोदया:
२०.०५.२०२० दिनाङ्के
नियामक पत्र स्वीकारदृश्यम्



# अन्नमाचार्यजीवनचरित्रम्




तेलुगु मूलम् - डा.मन्नूरु शिवप्रवीण्,
संस्कृतानुवादः- एम्.नागमाधुरी कामेश्वरी,
चरवाणी - ९४४०८४८८५८

**अन्नमाचार्य जननम् -** यथा शुभग्रहाणामुच्छस्थितौ राजीवनयनवरप्रसादेन शक्तिमुनेः पराशरः जातः तथैव वैशाखमास विशाखानक्षत्रयुक्तशुभमुहूर्ते श्रीवेङ्कटेश्वरानुग्रहविशेषेण नारायणालक्कमाम्बा पुण्यदम्पत्योः श्रीहरेः खड्गः नन्दकस्यांशया अन्नमाचार्यः उदितः।

श्रीवेङ्कटेश्वरप्रभावेन सञ्जनिताय तस्मै शिशवे जाताशैचस्मार्तादि कर्माणि सशास्त्रमकारयत् नारायणसूरिः। तस्मै शिशवे - श्रीमहाविष्णोः आज्ञया ब्रह्मणः अपरं नाम ''अन्नम्'' इति पदं यथा आगच्छेत् तथा ''अन्नमय्या'' इति नामकरणमकरोत् नारायणसूरिः। शिशुः बहुकालनिरीक्षणात्परं जातः तदपि श्रीहरिवरप्रसादः इत्यतः तं शिशुं पितरौ अत्यन्त प्रेम्ना लालितवन्तः पालितवन्तश्च। तं बालम् अन्नमय्या, अन्नप्पा, अन्नमाचार्य, अन्नय्यः अन्ना इति बहुभिः नामभिः आह्वयन्तो प्रेमातिशयैः पालयन्ति स्म।

**अन्नमाचार्यस्य बाल्यम्ः -**

कारणसम्भवः पितरौ भाग्यवन्तौ, धर्मपरायणौ। पुष्पं विकसतेव सर्वासु दिक्षु तस्य सुगन्धं यथा प्रसारयति तथैव अन्नमाचार्यः बाल्ये एव परमसुज्ञानसम्पन्नो जातः। नन्दकांशजोइत्यतः बाल्यादारभ्यैव आध्यात्मचिन्तनाऽप्यपि अस्ति। तेनैव ज्ञानेन माता भोजनं खादयति चेदपि न खादति स्म। जलप्रवाहाय गमनमार्गः दर्शनीयः किम्? मधुमक्षिकायै मन्दरपुष्पमकरन्दः दर्शनीयो किम्? राजहंसाभ्यः मन्दाकिन्यां तरणं शिक्षेतव्यः किम्? आम्रपल्लवान् भुक्त्वा कूजमानाय पिकाय स्वराः शिक्षेतव्याः किम्?

पूर्णिमाचन्द्रकान्तिमास्वादयितुं चकोरश्चोदनीयः किम्? कारणजन्मनां श्रीहरेः अम्बुजोदर दिव्यपादारविन्द - चिन्तनामृतपानं स्वतः सिद्धतया आयाति। भगवत्संकल्पम् अन्नमाचार्यजननम्। भगवतः लीलाविन्यासं अन्नमाचार्य

कीर्तनम्। श्रोतव्यमिति सप्ताचलाधीशस्य तेलुगुगीतं काक्षया जाताय वरप्रसादाय अन्नमाचार्याय श्रीहरि भक्तिः शिक्षेतव्यः किम्?

एडपक तोहेलो ------------ (तेलुगु श्लोकः) डोलायां संस्थाप्य लालिते सत्यपि श्रीवेङ्कटेश्वरस्य नाम न श्रूयते चेत् निद्रामपि न करोति स्म। नवजात शिशोः श्रीवेङ्कटेश्वरस्योपरि तादृशी भक्तिः कथम्? पूर्वजन्मवासनाः पूर्वजन्मनि कृत संस्कारापेक्षया कारणसम्भवेभ्यः तेषां जन्मकारणं कोऽपि कथनस्य अपेक्षा नास्ति। पूर्वजन्मसंस्कारः एव वदति। अन्नमाचार्याय श्रीवेङ्कटेश्वरभक्तिरसास्वादन शिक्षणं नाऽपेक्षते।

### अन्नमाचार्यस्य विद्याभ्यासः -

अन्नमाचार्यः शुक्लपक्षचन्द्रमिव दिनदिनप्रवर्धमानः पञ्चमवर्षे प्रविष्टः। अपार पाण्डितीगरिमायुक्तः नारायणसूरिः बालाय उपनयनसंस्कारमकारयत्। आजन्म सुज्ञाननिधये ब्रह्मोपदेशमपि कृतवान्। नारायणसूरिः बालं वेदाध्ययने स्थापितवान्। शेषशैलेन्द्रस्य श्रीवेङ्कटेश्वरस्य कृपाकटाक्षवीक्षणपुष्कलत्वात् अन्नमार्चस्य जिह्वायां वैदिक, नैतिकविद्याः नृत्यं कृतवत्यः। गीतानि सर्वाण्यपि गीतानि परमगानानि, सुधातुल्यानि। तस्य कवित्वं, गीतं ताल्लपाकग्रामवासिनः सर्वेऽपि बहुधा प्रशंसितवन्तः। तदा वेङ्कटपतिमुद्दिश्य आश्चर्यजनकानि स्तुतिगीतान्यपि रचितवान्। अन्नमाचार्यः गृहे कर्तुमुक्तानि सर्वाण्यपि कार्याणि श्रद्धतया करोति स्म। पितृभिः उक्तं कार्यम् आनन्देन परिसमापयति स्म। अन्यैः कुटुम्बसभ्यैः उक्तानि कार्याणि परिप्रश्नां विना करोति स्म। तदा एकस्मिन् दिने गोग्रासानायनाय पितरौ अन्नमाचार्याय सूचितौ। अन्नमाचार्यः गोग्रासमानेतुं आयुधं स्वीकृत्य ग्रामात् बहिः गतवान्। हस्ते तीक्ष्णं आयुधं/ तीक्ष्णमायुधं गोग्रासानयनाय न, आयुधादपि तीक्ष्णैः स्वपदकविताभिः श्रीहरेः लालनमेव क्रियायाः अन्तरार्थः। सङ्कल्पोऽयं श्रीवेङ्कटेश्वरस्य पशुग्रासानयनाय गतः अन्नमाचार्यः ग्रासनिष्काषण समये तस्याऽङ्गुल्यां गायः जातः। हस्तात् रक्तः श्रवमाणः अस्ति। हस्तगतमायुधमधः पतितम्। किञ्चित्समयं यावत् किं जायमानमस्तीति किमपि नावगतवान्। तस्यामवस्थायां सः तत्र किमर्थं गतः? किं कुर्वन्नस्तीति प्रश्नौ मनसि उदितौ। ये तं गोग्रासानयनाय प्रेषितवन्तः ते के तैः सह तस्य को सम्बन्धः इत्यादयः प्रश्नाः पीडिताः। चराऽचरसृष्टेः बन्धुः श्रीहरिरेव। सः शेषाद्रिरमणः एव तस्मै माता, पिता, गुरुः, देवः, सखा सर्वस्वमिति चिन्तनसमये कुतश्चित् गोविन्दनामानि तस्य कर्णे पतितानि। गोविन्दनामस्मरण स्वरः श्रुतः। सर्वत्रावलोकने सति रामसैन्यमिव गोविन्दनामस्मरणं कुर्वन्तः ताल्लपाकग्रामात् श्रीवेङ्कटेश्वरदर्शनार्थं तिरुमलां प्रति गम्यमानानां श्रीवेङ्कटेश्वरभक्तानां बृन्दः दृष्टः। तेषु केचन वाद्यविशेषान् वादयन्तः सन्ति। अन्ये सर्वेऽपि वाद्यानुगुण रसरम्यं गीतम् आलापयन्तो सन्ति। तदा अन्नमाचार्याः सः भक्तगणः सनकसनन्दादि महर्षयः इव स्फुरितः। तेन भक्तजनसमूहेन सह अजानन्नेव अन्नमाचार्यः तं भक्तबृन्दमनुसृतवान्।

### तिरुमलां प्रति अन्नमाचार्यस्य प्रवासः -

कोनेटि रायडे.....(तेलुगुश्लोकः) (अन्नमाचार्यचरित्रम् द्विपद पुट १०९,११०) कोनेटिराय सप्ताचलाधीश, वरप्रदायक इति बहुधा स्तुवन् गम्यमानं तं भक्तजनसन्दोहमनुसरन् अन्नमाचार्यः गच्छन्नासीत्। तैः भक्तजनैः सह प्रवासं क्रियमाणः अन्नमाचार्यः तिरुपति गङ्गम्मायाः मन्दिरं प्रति प्राप्तवान्। तस्यै मात्रे अनेकान् नमस्कारान् समर्पितवान्। ततः तिरुमलापर्वतारोहणं कुर्वन् मार्गे नृसिंहस्वामिनः तलयेरुगुण्डु इति प्रान्तस्य दर्शनमपि कृतवान्। परमपवित्रं, परमपावनं, पापलवित्रं तिरुमलपर्वतानां शोभामास्वादयन् पुलकितः अन्नमाचार्यः मोकाल्लपर्वतं प्राप्तवान्। जन्मतः मातरं त्यक्त्वा कुत्राऽपि न प्रस्थितः अन्नमाचार्यः क्षुदा सुदीर्घप्रवासात् अलसः जातः। अलसः अन्नमाचार्यः एकस्यां शिलायां निद्राणवान्।

### पद्मावत्याः कटाक्षः -

अन्यैः भक्तैः अज्ञातं अन्नमाचार्यस्य क्षुदां सा अलमेलुमङ्गा ज्ञातवती। सा सर्वमङ्गला वृद्धस्त्रीरिव आगता। सा सर्वमङ्गला अन्नमाचार्यस्य समीपमागतवती। प्रपञ्चे स्वसन्तानस्य क्षुधां केवलं माता एव जानाति खलु? 



# जगन्नाथरथयात्रा

- डा.अजयकुमारनन्दः, साहित्याचार्यः, चरवाणि - ९१८२३४१०५२

भारतवर्षे चत्वारि पवित्रधामानि सन्ति। सत्ययुगस्य बद्रिनाथः, त्रेतायाः रामेश्वरः द्वापरे द्वारिका, कलौ श्रीक्षेत्र श्रीजगन्नाथः इति।

एतेषु चतुर्षु धामसु एकस्य परमपवित्र स्थानस्य पुरीधाम्नः महिमा वेदोपनिषत्पुराणसंहिता धर्मशास्त्रकाव्यादिषु ग्रन्थेषु विस्तारेण वर्णितोऽस्ति।

पुर्यांया रथयात्रापरिपाल्यते सा च रथयात्रा कस्मादेव आवाहनकालात् प्रचलन्ती अस्ति। तद्विषये कोऽपि स्पष्टरूपेण वक्तुं नैव पारयति।

एकस्मिन् वर्षे एकवारं प्रभुश्रीजगन्नाथः भ्राता बल भद्रः भगिनी सबद्राभ्यां सह सुवर्णमण्डपं प्रत्यायाति। सूवर्णमण्डपे स्नानादिकं कारयित्वा सर्वान् देवान् रथं प्रति नयन्ति। भक्ताश्च चतुर्थामूर्तीः ''पहण्डिं'' कृत्वा। (डोलयित्वा) नयन्ति। रथेचोपावेशयन्ति। उपावेशनात्परं डाकिनी शाकिनी, भूत, प्रेत, पिशाचादीन् सन्तोषयितुं एकस्मिन्मृण्यपात्रे पञ्चामृतादीन् पूर्णयकारयित्वास्थापयन्ति। तथा तन्मृर्ण्मयपात्रं मृत्तिकायां भञ्जयन्ति। तत्तुसर्वे अधिदेवता पार्श्वदेवता पिशाचादयः भुक्त्वा सन्तोषप्रापणात्परं रथमाकृषन्ति इयंकाचित् पारिपाटी भवति।

वस्तुतः आषाढशुक्ल द्वितीया तिथौ एतस्याः रथयात्रायाः आरम्भः जायते। किमितिचेत् एतस्मिन्दिने श्री जगन्नाथः समग्रविश्वमानवजातिं दर्शनं ददाति। परम्परानुसारेण त्रयाणां देवानां कृते त्रयः रथाः निर्मीयन्ते। श्रीजगन्नाथस्य रथस्य नाम ''नन्दिघोषः'' एतस्मिन् रथे ''८३२'' काष्ठ खण्डानां व्यवहारः क्रियते। अमुष्मिन् रथे ''१६'' चक्राणि भवन्ति। रथे यदेव आवरणं भवति तत्तु रक्तपीतवर्णो च भवतः। नन्दिघोषस्य रक्षकः साक्षाद्गरुडः भवति। दारकः नन्दिघोषस्य सारथिः भवति। जयविजयौ द्वावपि द्वारपालौ भवतः। श्रीजगन्नाथ रथे या पताका भवति, तस्यां पताकायां साक्षाद्रामदूतः हनुमान् विराजते। अयं च रथः ''३३'' हस्तपरिमितोच्चः भवति। ''५'' अङ्गुलि विशिष्टाकारः भवति।

द्वितीय रथः बलभद्रस्य भवति। बलभदस्य रथस्य नाम ''तालध्वजः'' भवति। एतस्मिन् रथे ''७६३'' काष्ठ खण्डानां व्यवहारः क्रियते। अमुष्मिन् रथे ''१४'' चक्राणि भवन्ति। तालध्वज रथस्य रक्षकः साक्षाद्वासुदेवः भवति। रथस्यावरणं तु रक्त नील वर्णौ भवतः। रथस्य मुकुट प्रदेशे अनन्तनागः अवतिष्ठते। रथे या रज्जुः विद्यते सा तु वासुकित्वेन परिकल्प्यते। अमुष्य रथस्योच्चता ''३२'' हस्त परिमिता भवति। ''१०'' अङ्गुलिविस्तारः भवति।

तृतीय रथः यः भवति सः देव्याः सुभद्रायाः। सुभद्रायाः रथस्य नाम ''दर्पदलनम्'' भवति। अस्मिन् रथे ''४९३'' काष्ठ खण्डानां व्यवहारो विधीयते। इत्युक्ते ''४९३'' काष्ठखण्डैः रथोऽयं निर्मीयते। एतस्मिन् रथे प्रायशः ''द्वादश'' (१२) चक्राणि भवन्ति। अस्य रथस्य रक्षकः जयदुर्गा भवति। पताकायां देवीत्रिपुर सुन्दरी विराजते। रथस्य यदावरणं भवति तत्तु कृष्ण लोहित वर्णौस्तः। उग्रचण्डी एतस्याः सुभद्रायाः रथस्य रक्षयित्री भवति। स्वर्ण चूड नामक कश्चिन्नागः एतस्याः सुभद्रायाः रथस्य रज्जुस्वरूपः भवति। अयं च रथः ''३१'' हस्त परिमितोच्चः भवति। रथस्यास्य सारथिः अर्जुनः भवति।

रथनिर्माणात् पश्चात् त्रीन् रथान् आनीय सिंहद्वारे संस्थापयन्ति। आषाढशुक्ल प्रतिपद्दिवसे महाप्रभुः श्रीजगन्नाथः ''अणसर'' (अवसरः) गृहात् बहिर सुस्थो भूत्वयाति तदा नेत्रोत्सवः परिपाल्यते। भगवतः दर्शनं नवयौवन वेषे एतस्मिन्दिवसे प्रथमवारं जायते। अग्रिम दिवसे नाम द्वितीयायाः प्रातः मङ्गलारतेः परं भगवन्तं पुष्पवेषालङ्कारैः सुष्ठु सज्जयन्ति। अपि च पूजार्चनाभ्यः परं भगवन्तं ''पहण्डिं'' कृत्वा (डोलयित्वा) रथान् प्रत्यानयन्ति। इयं ''पहन्डीं'' इत्युच्यते। सर्वान् देवान् रथोपवेशनात् परं परम्परानुगुणं गजपति महाराजः समायाति तथा रथानां पुरतः सुवर्णमार्जन्या सम्मार्जयति। तथा नमस्कारं विधाय जगन्नाथ वंशवाद्सेवकेति विनम्रेण प्रणामयति। इयमेव पद्धतिः ''छेशपहँरा'' (सम्मार्जनमिति) कथ्यते। तदनु घण्टा मृदङ्ग, नृत्य, भेरी, तूर्य नादवाद्यैः सर्वे भक्ताः सर्वदेव रथान् भक्त्याऽकृषन्ति। तदा एव रथयात्रायाः आरम्भः भवति।

रथास्सर्वे गुण्डिचा मन्दिरं प्रति यान्ति। सर्वे देवाः निजमातुल्याः गृहे नवदिनानि यावत्तिष्ठन्ति। श्रीमन्दिरस्य सर्वाः नीतयः तत्र प्रचाल्यन्ते। पुनः दशम्यां तिथौ प्रातः महाप्रभोः श्री जगन्नाथस्य ''बाहुडा'' यात्रा (प्रत्यावर्तन यात्रा) प्रारभ्यते। इयं यात्रा बाहुडायात्रा नान्म्या कथ्यते।

प्रातः पूर्ववदेव मङ्गलारतीः जायते। वेष महाप्रसादयोः पारम्परिक रीतिरपि सम्पद्यते। सर्वान्देवान् गुण्डिचामन्दिरतः आनीय रथेषु उपावेशयन्ति। तदनु गजपतिराजः सम्मार्जनीं कृत्वा गौरवभाक् भवति। विशालजन सम्मर्दस्थाः जनाः तानेव रथान् आकृषन्ति। रथाः ''बडदाण्ड'' (बृहत्प्राङ्गणे) चलन्ति। सिंहद्वारंप्रत्यागत्य सर्वे रथाः तिष्ठन्ति। भक्ताः हर्षोल्लासमनु भवन्ति। ततः परं सर्वे देवाः यथा स्थानेषु रत्न सिंहासने सुशोभन्ते। पञ्चदिवसेभ्यः परं भगवत श्रीजगन्नाथसस्य सुवर्णाभिषेकः जायते। एतस्मिन् दिवसे सर्वेषां देवानां शरीरे नानासुवर्णहीरकमाणिक्य वैदूर्यादयः अलङ्काराः खचिताः भवन्ति तमेव सुवर्णवेषः इति वदन्ति। सुवर्ण वेषः भक्तानां आनन्दं ददातीति हेतोः महाप्रभु श्रीजगन्नाथः पतित पावन रूपं धरति। एवं रूपेण अयं वार्षिकरथोत्सवः सम्पद्यते।

अस्मात् सर्वे रामानुज, शङ्कराचार्य, कबीर, मीराबाई, नानक्, तुलसीदास तथा च अन्ये च महात्मानः रथोत्सवं द्रष्टुं उत्कण्ठिताः आसन्। अस्मादुच्यते स्कान्धे, डोलायां (दोलायां) दोलगोविन्दिं
चापेतु मधुसूदनम्!
रथेतु वामनं दृष्ट्वा
पुनर्जन्म न विद्यते॥



# हरिदासवाङ्मये श्रीवेङ्कटाचलाधीशः

- डा.गङ्गिशेट्टि लक्ष्मीनारायणः

चरवाणी - ९४९४२४८३४८



नवविधभक्तिमार्गेषु अन्यतमः मार्गः दास्यमार्गः वर्तते। दास्यभक्तिः मोक्षप्रदायिनी भवति। दासरेंदरे पुरंदरदासरय्य इत्येवं गुरुभिः व्यासरायवर्यैः पुरंदरदासाः संस्तुताः। दासाः नाम पुरंदरदासाः एव इति प्रशस्तिः समागता चेदपि असन्तुष्टाः पुरंदरदासाः। अहं हरिदासः न अभवम् इति श्रीहरये अन्तरङ्गं विनिवेदयन् **दासनेंतागुवेनु धरे योळगेनानु** - अहं अस्याम् भूमौ कथं दासः भविष्यामि इति खेदम् अनुभवन् कानिचन लक्षणाणि दयया अनुगृह्य तदनु मां दासरूपेण भावय इति श्रीवेङ्कटाचलधीशं पुरंदरदासाः प्रार्थितवन्तः।

**दुर्बुद्धिगळनेल्ल बिडिसो निन्न करुण कवच वेन्न हरणक्के तोडिपो।**
**चरणसेवे यनगे कोडिसो। अभय। करपुष्पव एन्नशिरदल्लिमुडिपो।।**

हे स्वामिन्! दुर्बुद्धेः मां मुक्तं करोतु। तव करुणाकवचं मम जीवनाय धारय। तव पादसेवाम् अनुगृह्णातु। तव अभयहस्तपुष्पं मम शिरसि स्थापय। इत्येवं प्रकारेण पुरंदरदासेन वेङ्कटाचलमाहात्म्ये विद्यमानानां वृषभाचल-अञ्जनाचल-शेषाचल-वेङ्कटाचलवृत्तान्तानां स्फुरणं कारितम्।

**दृढभकुति निन्नल्लिबेडि। ना। अडिगेरगुवेनय्य अनुदिनपाडि।**
**कडेगण्णिले केन्न नोडि। बिडुवे। कोडुनिन्नध्यानवमनशुचिमाडि।।**

हे भगवन्! दृढभक्त्यर्थं त्वाम् एव प्रार्थयामि। तव पादयोः पतित्वा सदा गायामि। मम उपरि तव सम्पूर्णदुष्टिं ध्यानं च अनुगृह्य त्रिकरणशुद्धिं प्रयच्छतु।

**मोरेहोक्कवरकाय्य बिरुदु। एन्न।**
**मरेयदे रक्षणेमाडय्य पोरेदु।**
**दुरितगळेल्लव तरिदु। सिरि।**
**पुरंदर विठलवेम्मनुन्ननु पोरेदु।।**

भक्तवत्सलः इति उपाधिधारिन् हे स्वामिन्! मां न विस्मृत्य रक्षतु। कष्टान् दूरीकृत्य माम् उद्धरेत्।

**दासनमाडिको एन्न स्वामि। सासिर नामद वेङ्कटरमण**

सहस्रनामधारिन् वेङ्कटेश! मां तव दासं कुरु। यदि सूक्ष्मतया विचार्यते चेत् कश्यपादि ऋषियज्ञादारभ्य पद्मावतीपरिणयं यावद् कथांशाः उपर्युक्तयोः श्लोकयोः स्फुरणं कारितवन्तः। दास्यभक्तिम् अधिकृत्य श्रीविजयदासवर्याः विस्तृततया विवृण्वन् भगवन्तं श्रीवेङ्कटेश्वरम् एवं प्रकारेण प्रार्थितवन्तः।

**दास दास दासर दास्यवकोडु। दोषराशिगळनळिदु**
**श्रीशधीश सुरेश सर्वेश्वर। भासुर गुणगण भव्यचरितहरे।।**

दास दास दासर दास्यव - कृत्वा तेषु दासेषु दास्यभक्तिम् अनुगृण्हातु। अत्र त्रयः दासाः इत्युक्तौ श्रीहरिः, वायुदेवः, पुरंदरदासश्च भवन्ति। प्रथमचरणे चित्त निन्न चिंतेयोळिरति.... मनः सर्वदा तव चिन्तने भूत्वा बाधाः दूरीकरोतु। तेन मम अन्तरङ्गतः अहङ्कारः अपगच्छतु। एवं सततं तव पादौ आश्रयणीयौ इति दृढमार्गे मम प्रस्थानं क्रियताम्। इतोऽपि अरिषड्वर्गवनं तव दयाखड्गेन विच्छेद्य आनन्दं प्रयच्छतु। दुर्जनसाङ्गत्यं दुर्बुद्धिं च दूरीकरोतु। हे स्वामिन्! सर्वदा मां सज्जनेषु संयोज्य रक्षतु। एवं प्रकारेण हरिदासाः दास्यभक्तिम् अनुगृण्हातु इति भगवन्तं प्रार्थयन्तः दास्यभक्तिलक्षणानि उक्तवन्तः। न केवलम् एतत् न हि ज्ञानेन सदृशं पवित्रमिह विद्यते, प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः इति गीताचार्याणां वाक्यानुसारं मध्यमतवुमतवे सकल श्रुति सममतवु इति मध्वाचार्याणाम् अनुयायिनां ग्रन्थाः प्रधानतया

सप्तत्रिंशत् मूलग्रन्थावगाहनेन संप्राप्यमाणा अनुभूतिसद्भावना एव श्रीहरिदास्यभक्तिः भवति।

**दास्यभक्तिः कीर्तनभक्तिः**

युगभेदान् अनुसृत्य भगवतः अनुग्रहार्थं कृतयुगे तपः त्रेतायुगे यज्ञयागादिकम् द्वापरयुगे व्रताचरणम् अर्चनं च कृताः। कलियुगे सत्कर्मानुष्ठानफलेन सह सङ्कीर्तनेन भगवदनुग्रहः सिध्यति इति श्रीमद्भागवते उक्तम्।

**ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।**
**यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्।।**
**कृते यद् ध्यायतो विष्णुं त्रेतायां यजतो मखैः।**
**द्वापरे परिचर्यायां कलौ केशवकीर्तनात्।**

अनयोः श्लोकयोः भावमेव श्रीपादरायवर्याः एवं कथितवन्तः।

**ध्यानवु कृतयुगदि। यजन यज्ञपु त्रेतायुगदि**
**दानवांतकन देवतार्चनेयु द्वापरयुगदि - आ**
**मानवरिगेष्टु फलवो अष्टुफलवु - ई कलियुगदि**
**गानदि केशव येनलु कैकोडुवरंगविठल।।**

अतः एव युगधर्मानुसारं हिरण्यकशिपुना तपः दशरथेन यज्ञः गोपिकाभिः व्रताणि आचरितानि। एवं कलियुगे भगवन्तं कीर्तयामः चेद् अलम्। भगवतः सङ्कीर्तनस्य फलमपि श्रीमद्भागवते वर्तते।

**एतावतालमघनिर्हरणाय पुंसां**
**सङ्कीर्तनं भगवतो गुणकर्मनाम्नाम्**
**विक्रुश्य पुत्रमघवान्यदजामिलोऽपि**
**नारायणेति म्रियमाण इयाय मुक्तिम्।।**
**प्रायेण वेद तदिदं न महाजनोऽयं**
**देव्या विमोहितमतिर्बत माययालम्।**
**त्रय्यां जडीकृतमतिर्मधुपुष्पितायां**
**वैतानिके महति कर्मणि युज्यमानः।।**

पापनिवृत्यर्थं नरकविमोचनार्थं परमात्मनः गुणगानम् उत्तमं साधनम्। एतस्य लक्ष्यप्रायः भवति अजामिळः। वेदार्थान् भागवतधर्मान् च निर्दुष्टतया अज्ञात्वा स्वर्गादिफलेभ्यः यज्ञादिभिः कालहरणम् अपेक्षया भक्त्या भगवतः सङ्कीर्तनं क्रियते चेत् अलमिति यमधर्मराज्ञः अभिप्रायः।

**नामसङ्कीर्तनाद्विष्णोः दह्यते बहु पातकाः** नामसङ्कीर्तनेन पापराशयः दग्धाः भवन्ति। भक्त्या उच्चैः भगवतः नामस्मरणं यः करोति मत्तः भीतः न भवतीति यमः स्वकीयं भटं प्रति उक्तवान्। यः श्रीहरेः माहात्म्यवर्णनं गायति श्रुणोति सः आनन्दितो भूत्वा तस्य मनः परिवर्तनं भविष्यति। यः श्रीहरेः सेवां करोति सः भवसागरं सुलभतया अवतरति इति कुन्तीदेव्याः अभिप्रायः। लोके यथा सूर्योदयेन अन्धकारः एवमेव वायोः समागमनेन मेघाः अपगच्छन्ति तथैव भगवतः नामसङ्कीर्तनेन मनसि विद्यमानं अज्ञानं पापं च अपगच्छतः। सङ्कीर्त्यमानो भगवाननन्तः..... यथा तमोऽर्कोऽभ्रम वाति वातः। यथा अग्निस्पर्शनेन लोहाः द्रवन्ति तथैव श्रीहरिनानमसङ्कीर्तनेन पापानि अपगच्छन्ति इति माध्वाचार्यः अकथयन्। अतः एव द्रविडभाषयां (कन्नडभाषायाम्) पद्य-गद्य-चम्पूकाव्यानि भवन्ति चेदपि सद्यः फलति सङ्गीतम् इत्युक्तरीत्या गीत-वाद्य-नृत्यप्रधानसङ्गीतशैल्या पद्यपद्यसुळादिकीर्तनैः हरिदासाः भगवन्तं कीर्तयन्ति। तेन च माध्वाचार्याः नैकान् तात्त्विकविषयान् हृदयङ्गमरीत्या रञ्जकरागतालैः नाट्यानुकूलतया भक्ति-वैराग्य आध्यात्मिकभावनाभिः, प्रभुमित्रकान्तासम्मिततया नारिकेलकदलीद्राक्षादिपाकैः सन्दर्भानुगुणं व्यासवाणीं सुलभद्रविडशब्दैः सत्सिध्दान्तसम्प्रदायश्रोतृभ्यः गायकेभ्यः तेषां योग्यतानुसारं यथावागमनं च विलिख्य गानं कृतवन्तः।

**कीर्तिसि जनरेल्ल हरिय गुण। कीर्तिसि जनरुकृतार्थ रागिरो**

हे सर्वे जनाः श्रीहरिगुणान् कीर्तयित्वा धन्याः भवन्तु इति श्रीपादरायाः वदन्तः श्रीहरिनामसङ्कीर्तनकाराः वाल्मीकि-शबरि अहल्या इत्यादि भक्ताः पवित्रीभूताः इत्यपि अवदन्।

कलियुगदोळु हरिनामवनेनेदरे कुलकोटि गळुद्दरिसुवरो
नामकीर्तने अनुदिन मार्पिगे नरकभयगळुंटे नाम ओंदे
यमनाळगळ नोदेदु अजमिळनिगे सुक्षेम वित्तहरि नित्यं

श्रीहरिनामकीर्तनं ये कुर्वन्ति तेभ्यः नरकभीतिः न भवति। अस्मिन् कलियुगे नामकीर्तनेन वंशावलिः धन्यतां प्राप्नोतीति कथयन्तः पुरंदरदासाः - सिंहशाबकं दृष्ट्वा गजसमूहस्य पलायनम् अग्निस्पर्शनेन काननस्य दहनम्, सूर्योदयेन अन्धकारस्य निर्गमनम्, वज्रायुधेन पर्वतनां पक्षछेदनम् वैनतेयदर्शनेन सर्पाणां भीतिः यथा भवति तथैव नामसङ्कीर्तनेन

पापानि निर्गच्छन्ति।

**गानवपाडिदव हरिमूर्ति नोडिदव** भक्त्या भगवतः गानं क्रियते चेद् श्रीहरेः दर्शनं भवित। अयं योगमार्गेषु अन्यतमः। अतः एव विजयदासवर्याः **कानलोलन कुळ्ळिरिसि ध्यानदिद भजिसुवे श्रीहरिः गानलोलः** अतः गानेन एव सेवां करोमि इति अवदन्। यथा गीतपद्धत्या सुलभोपायेन शिशुफणिप्राणिनः अपि आनन्देन शिरः कम्पनं कुर्वन्ति तथैव नृत्यं कुर्वन् गीतं गायन् भगवन्तं श्रीहरिं भजन्ति चेद् बन्धविमुक्तिः भवति। हरिकथामृतसारः इत्यस्मिन् ग्रन्थे जगन्नाथदासाः अपि पटाटोपाय वा उदरपोषणार्थं वा रोगोपद्रवकालेषु वा मनसा श्रीहरिकीर्तनं कुर्वन्ति चेत् विठलः भवसागरं तारयति इति अवदन्।

**बिट्टकळ नेनदिंदलागलि। होट्टगोसुगवाद डागलि**
**केट्टरोग प्रयुक्तवागलि। अणकदिंदोम्मे**
**निट्टुसिरिनिंबाय्देरेदु बरि विठला सलहेंदेनलुकै**
**गोट्टु कान कृपालु संतत तन्न भकुतरनु।।**
**इहपर साधनमिदियोकटे। सहजपु मुरारि सकीर्तनोकटे**
**संतोषकरमैन संकीर्तनं। संतापमणगिंचु सकीर्तनं।।**
**जंतुवुल रक्षिंचु संकीर्तनं। संततमु दलचुडी संकीर्तनं।।**
**जलजासनुनि नोरि संकीर्तनं। चलिकोंड सुत दलचु संकीर्तनं।।**
**सरविसंपदलिच्चु संकीर्तनं। सरिलेनिदिदियु पो संकीर्तनम्।।**
**सरुस वेंकटविभुनि संकीर्तनं। सरुगननु दलचुडी संकीर्तनम्।।**

इति अन्नमाचार्याः अपि सङ्कीर्तनपद्धतिम् अनुसृत्य तस्याः पद्धतेः वैशिष्ट्यम् अकथयन्। अतः कर्णाटकहरिदासाः सङ्कीर्तनपद्धतिम् अनुश्रुत्य साहित्यानुगुणं रागातालादिकं संयोज्य नाट्यानुकूलं तालगतियुक्तं श्रीकृष्णलीलातरङ्गान् उत्तमपदैः विरचय्य गानं कृतवन्तः।

कर्णाटकहरिदासप्रसङ्गे श्रीपादारायः आद्यः भवति। तदनु व्यासरायः वादिराजश्च तदनन्तरं पुरंदरदास-कानकदास-विजयदास-गोपालदास-जगन्नाथदासाः वक्तव्याः। अनन्तरं एतेषां मार्गम् अनुसृत्य सङ्कीर्तनं कृतवतः हरिदासान् आरभ्य अद्यावधि हरिदासाः परिगणनीयाः। श्रीमध्वाचार्याणां सत्सिद्धान्तसम्प्रदायम् अनुसृत्य वेदशास्त्रपुराणोपनिषदाम् आधारेण हरिदासाः मध्वसिद्धान्तान् स्वकृतिषु सुलभसुन्दरपदैः निक्षिप्य रागतालैः गीत्वा आनन्दिताः भूत्वा आलोच्य अर्थावगतिमपि सम्प्राप्य अन्यान् अपि आनान्दितान् कृतवन्तः। एकमापातमधुरम् अन्यदालोचनामृतम् इत्युक्तरीत्या हरिदासानां पदसाहित्यं सार्वकालिकं, सार्वजनीनं सर्वजनामोदयोग्यं च। हरिदासानां साहित्यम् ऐश्वर्यप्रदम् आरोग्यप्रदं च भवति। विश्वहितभावनया हरिदासानां साहित्यं विश्वसाहित्यं जातम्।

कर्णाटकहरिदासंकीर्तनेषु देवतास्तुतयः वैराग्यप्रबोधकविषयाः प्रामाणिकतया वर्तन्ते। हरिदासाः भारतीयदेवतानां संस्तुतिं कुर्वन्तः अन्ततो गत्वा विठलाय कीर्तनानि समर्पितवन्तः। श्रीपाददासवर्यम् आरभ्य अद्यावधि हरिदासाः प्रधानतया गणपति-पार्वति-वारुणि-सापर्णि-भारती-सरस्वती-गरुडादि देवान् अभीष्टसिध्यर्थं कीर्तितवन्तः। पुरंदरदासाः एतेषां देवानां कीर्तनम् अस्मिन् कीर्तने कृतवन्तः।

**सतत गणनाथ सिद्धिय नीव कार्यदलि**
**मति प्रेरिसुवळु पार्वतीदेवि मु-**
**कुतिपथके मनवीव महरुद्रदेवरु हरिभ-**
**कुति दायकळु श्री भारतीदेवि यु-**
**कुति शास्त्रगळल्लि वनजसंभवनरसि**
**सत्कर्म गळवडेसि सुज्ञान मतियतितु**
**गतिपालुसुव नम्म गुरुपवमाननु**
**चित्तदलि आनंदसुखव नीवळु रमा भ-**
**कुत जनरोडय श्रीपुरंदर विठलनु**
**सतत इवरोळु विंत ई कृति नडेसुवनु**

इत्युक्तौ सकलकार्यसिध्यर्थं गणपतिं, सद्बुध्यर्थं पार्वतीम्, मोक्षमार्गे मनसः गमनार्थं शिवं, भक्त्यनुग्रहार्थं भारतीदेवीं, सकलशास्त्रज्ञानार्थं सरस्वतीदेवीं, सद्गत्यर्थं वायुं, चित्तानन्दाय लक्ष्मीम् एवं नैकान् देवान् प्रारम्भे संस्तुत्य सर्वोत्तमः श्रीपुरंदविठलः एतेषु देवेषु स्थित्वा माम् अनुगृण्हातु इति अकथयन्। विभिन्नकीर्तनेषु विभिन्नदेवतानं स्तुतिः वर्तते। श्रीहरेः दशावतारलीलादिकं स्तुत्वा भागवतोक्त - श्रीहरेः अन्याः अवतारान् कीर्तितवन्तः कीर्तनेषु अधिकतया नरसिंह-श्रीराम-कृष्णावताराणां स्तुतिः दृश्यते।















# शेषाद्रि विभोः सेवायां धर्मकर्तृमण्डलेः निर्णयाः

आन्ध्रप्रदेश् मुख्यमंत्रि वर्याणां गौरवनीय श्री वै.एस्.जगन् मोहनरेड्डीनां आदेशानुसारं करोना वैरस् नेपथ्ये ति.ति.देवस्थान धर्मकर्तमण्डलिः २०२० मे मासे २८ दिनाङ्कं तिरुमल अन्नमय्य भवने धर्मकर्तमण्डिलेः आध्यक्षाः श्री वै.वि.सुब्बारेड्डि महोदयाः, प्रत्येकं आह्वानितिः श्री भूमन करुणाकररेड्डिः, श्री चेविरेड्डि भास्कररेड्डिः, श्री मेडामल्लिकार्जुन रेड्डिः तथा ति.ति.दे. कार्यनिर्वहणाधिकारी श्री अनिल् कुमार्सिंघाल् ऐ.ए.एस्., महोदयः अन्य सभ्यैः सह Video Conference द्वारा समाविष्टाः बहूनां विषयाणां समालोचनं कृत्वा निर्णयान् अकुर्वन्। तेषु मुख्याः ।

ति.ति.देवस्थानस्य पारितोषिक रुपेण भक्तैः समर्पितानां भू गृहादीनां विक्रयस्य संपूर्ण निषेधः करणीय इति निर्णयं कृतवन्तः। भक्तैः पारितोषिक रुपेण प्रदत्तानां निधीनां दुराक्रमणं, निरुपयोगेन स्थितानामपि तेषां निधीनां भक्तानां मनो भीष्ट मनुसृत्य कथंवा उपयोज्याः इति विषये निर्णयं स्वीकर्तुं पालक मण्डलि सभ्यैः पीठाधिपतिभिः, भक्तैः मेधविभिः सभा योज नीया इति निर्णयं स्वीकृतवन्तः। तथा सभया समर्पितां निवेदिकां आराधत्वेन कः निर्णयः स्वीकर्तव्य इति चर्चां विधस्यामः इत्यवदन्।

राष्ट्रिय विभजनानन्तरं आन्ध्रप्रदेश प्रभुत्व निर्वहणे अर्भके शिशूनां वैद्यालयस्य अभावात् नवजातशिशवः बाधां अनुभवन्तीति बर्ड् वैद्यालये अथवा स्विम्स् वैद्यालये अथवा यत्रावकाशः वर्तते तत्र शीघ्रं अर्भक शिशूनां वैद्यालयः स्थापनीयः इति निर्णीता आसन्।

भक्ताः श्रीवेङ्कटेश्वरस्वामिनः दर्शनार्थं आशयानिरीक्षन्ते अमुं विषयमधिकृत्यापि बोर्डसमावेशे समीक्षां कृतवन्तः। लाक्डौन् अनन्तरं राष्ट्र प्रभुत्वानुमतिं गृहीत्वा शीघ्रमेव भक्तानां स्वामिदर्शन भाग्यं कल्पयिष्यामः। कोविड् १९ व्याप्ति नेपये भौतिकदूरं आचरन् कैश्चित् विधिभिः भक्तानां कथं दर्शनं कल्पयितुं शक्यते इत्यंशं स्वीकृत्य अधिकारिणः काश्चन सूचनाः प्रतिपादिताः। तांपद्धति मनुसरन् प्रभुत्व सूचनाः पालयन् जून् ८ दिनाङ्कतः भक्तानां दर्शनं कल्पयिष्यन्ति।

ॐ विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः।



Edited and Published on behalf of T.T.Devasthanams by Prof. K.Rajgopalan, Ph.D., Chief Editor, T.T.D., and
Printed at T.T.D.Press by Sri. P.Ramraju, M.A., Assistant Executive Officer., (Press & Publication), T.T.D. Press, Tirupati - 517 507.





तिरुचानूरु
श्रीपद्मावतीमातुः
वसंतोत्सव सन्दर्भे
स्नपनतिरुमंजनम्









श्रीनिवासमंगापुरम्
श्री कल्याणवेङ्कटेश्वरस्वामिनः
वसन्तोत्सवः





